॥ श्रीराधासर्वेश्वरो विजयते ॥





॥ श्रीभगवन्निम्बार्काचार्याय नमः॥

# नित्य स्तुति संकीर्तन
# तथा
# पालनीय नियम



## दो शब्द

जिस प्रकार द्विजातियों के लिए शास्त्रों में षोडश संस्कारों का वर्णन है, ठीक उसी प्रकार वैष्णव ग्रन्थों के लिए पद्मपुराण में पञ्चसंस्कारों का वर्णन है ।

तापः पुण्डं तथा नाम मन्त्रो यागश्च पंचमः ।
अमी हि पञ्चसंस्काराः परमैकान्तहेतवः ॥

तप्त शङ्ख सेचक्रादि अङ्कन अथवा गोपीचन्दन से शीतल मुद्रा तिलक, नामकरण मन्त्र दीक्षा तथा यज्ञ (देवादि पूजन) यह पाँच संस्कार परम मोक्षदायी हैं ।

अतः प्रत्येक वैष्णवजन को गुरु-दीक्षा ग्रहण करते हुए इन पञ्च-संस्कारों का पालन करना आवश्यक है । निम्बार्क सम्प्रदायानुयायी समस्त वैष्णव बन्धुओं को भी इनका ज्ञान हो इसी उद्देश्य से पुनः इस सप्तम संस्करण का प्रकाशन किया गया है ।

इसमें जहाँ दीक्षार्थिजनों के लिए पालनीय नियमों का वर्णन है वहीं प्रातःस्मरण स्तोत्र,, राधाष्टक स्तोत्र, गोपीजनवल्लभाष्टक स्तोत्र, सायंकालीन संकीर्तन, स्तुति, श्रीसर्वेश्वर भगवान् की आरती, श्रीनिम्बार्क भगवान् की आरती, कुछ उपयोगी पद एवं आचार्यपरम्परा आदि का भी प्रकाशन कर दिया गया है ।

आशा है नित्य प्रातः तथा सायंकाल दोनों समय इन स्तुतियों द्वारा भगवद् प्रार्थना करते हुए सभी भक्तजन लाभान्वित होंगे ।

निवेदक--स्व. पं. गोविन्ददास सन्त

श्रीसुदर्शन चक्रावतार आद्याचार्य जगद्गुरु श्रीभगवन्निम्बार्काचार्य प्रणीत-

# ।। श्रीप्रातःस्मरण--स्तोत्रम् ।।

प्रातःस्मरामि युगकेलिरसाभिषिक्तं
वृन्दावनं सुरमणीयमुदारवृक्षम् ।
सौरीप्रवाहवृतमात्मगुणप्रकाशं
युग्मांघ्रिरेणुकणिकाञ्चितसर्वसत्त्वम् ।।१।।

प्रातःस्मरामि दधिघोषविनीतनिद्रं
निद्रावसानरमणीयमुखानुरागम् ।
उन्निद्रपद्मनयनं नवनीरदाभं
हृद्यानवद्यललनाञ्चितवामभागम् ।।२।।

प्रातर्भजामि शयनोत्थितयुग्मरूपं
सर्वेश्वरं सुखकरं रसिकेशभूपम् ।
अन्योन्यकेलिरसचिन्हसखिदृगौघं
सख्यावृतं सुरतकाममनोहरं च ।।३।।

प्रातर्भजे सुरतसारपयोधिचिन्हं
गण्डस्थलेन नयनेन च सन्दधानौ ।
रत्याद्यशेषशुभदौ समुपेतकामौ
श्रीराधिकावरपुरन्दरपुण्यपुञ्जौ ।।४।।

प्रातर्धरामि हृदयेन हृदीक्षणीयं
युग्मस्वरूपमनिशं सुमनोहरं च ।

लावण्यधाम ललनाभिरुपेयमान-
मुत्थाप्यमानमनुमेयमशेषवेषैः ।।५।।
प्रातर्ब्रवीमि युगलावपि सोमराजौ
राधामुकुन्दपशुपालसुतौ वरिष्ठौ ।
गोविन्दचन्द्रवृषभानुसुतौ वरिष्ठौ
सर्वेश्वरौ स्वजनपालनतत्परेशौ ।।६।।
प्रातर्नमामि युगलांघ्रिसरोजकोश-
मष्टाङ्गयुक्तवपुषा भवदुःखदारम् ।
वृन्दावने सुविचरन्तमुदारचिन्हं
लक्ष्म्या उरोजधृतकुंकुमरागपुष्टम् ।।७।।
प्रातर्नमामि वृषभानुसुतापदाब्जं
नेत्रालिभिः परिणुतं व्रजसुन्दरीणाम् ।
प्रेमातुरेण हरिणा सुविशारदेन
श्रीमद्व्रजेशतनयेन सदाऽभिवन्द्यम् ।।८।।
सञ्चिन्तनीयमनुमृग्यमभीष्टदोऽहं
संसारतापशमनं चरणं महार्हम् ।
नन्दात्मजस्य सततं मनसा गिरा च
संसेवयामि वपुषा प्रणयेन रम्यम् ।।९।।
प्रातःस्तवमिमं पुण्यं प्रातरुत्थाय यः पठेत् ।
सर्वकालं क्रियास्तस्य सफलाःस्युः सदा ध्रुवा ।।१०।।

।। इति श्रीसुदर्शन-चक्रावतार आद्याचार्य जगद्गुरु
श्रीभगवन्निम्बार्काचार्य कृत प्रातः स्मरण-स्तोत्रं सम्पूर्णम् ।।

श्रीसुदर्शन-चक्रावतार आद्याचार्य जगद्गुरु भगवन्निम्बार्काचार्य प्रणीत-

# ।। श्रीराधाष्टकस्तोत्रम् ।।

नमस्ते श्रियै राधिकायै परायै
नमस्ते नमस्ते मुकुन्द-प्रियायै ।
सदानन्दरूपे ! प्रसीद त्वमन्तः
प्रकाशे स्फुरन्ती मुकुन्देन सार्धम् ।।१।।

स्ववासोपहारं यशोदासुतं वा
स्वदध्यादिचौरं समाराधयन्तीम् ।
स्वदाम्नोदरे या बबन्धाशुनीव्या
प्रपद्ये नु दामोदरप्रेयसीं ताम् ।।२।।

दुराराध्यमाराध्य कृष्णं वशे तं
महाप्रेमपूरेण राधाऽभिधाऽभूः ।
स्वयं नाम कीर्त्या हरौ प्रेम यच्छ
प्रपन्नाय मे कृष्णरूपे समक्षम् ।।३।।

मुकुन्दस्त्वया प्रेमडोरेण बद्धः
पतङ्गो यथा त्वामनुभ्राम्यमाणः ।
उपक्रीडयन् हार्दमेवानुगच्छन्
कृपा वर्तते कारयातो मयीष्टिम् ।।४।।

व्रजन्तीं स्ववृन्दावने नित्यकालं
मुकुन्देन साकं विधायाङ्कमालम् ।

समामोक्ष्यमाणाऽनुकम्पाकटाक्षैः
श्रियं चिन्तयेत्सच्चिदानन्दरूपाम् ॥५॥

मुकुन्दानुरागेण रोमांचिताङ्गै-
रहं व्याप्यमानां तनुस्वेद-बिन्दुम् ।
महाहार्दवृष्ट्या कृपापाङ्गदृष्ट्या
समालोकयन्तीं कदा त्वां विचक्षे ॥६॥

यदंकावलोकं महालालसौघं
मुकुन्दः करोति स्वयं ध्येयपादः ।
पदं राधिके ते सदा दर्शयान्त-
र्हृदिस्थं नमन्तं किरद्रोचिषं माम् ॥७॥

सदा राधिका-नाम जिह्वाग्रतः स्यात्
सदा राधिकारूपमक्ष्यग्र आस्ताम् ।
श्रुतौ राधिकाकीर्त्तिरन्तः स्वभावे
गुणा राधिकायाः श्रिया एतदीहे ॥८॥

इदं त्वष्टकं राधिकायाः प्रियायाः
पठेयुः सदैवं हि दामोदरस्य ।
सुतिष्ठन्ति वृन्दावने कृष्णधाम्नि
सखीमूर्तयो युग्मसेवानुकूलाः ॥९॥



अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर
श्री श्रीजी श्रीसर्वेश्वरशरणदेवाचार्यजी महाराज कृत-

# ॥ श्रीगोपीजनवल्लभाष्टकस्तोत्रम् ॥

नवाम्बुदानीक-मनोहराय प्रफुल्लराजीव-विलोचनाय ।
वेणुस्वनाऽऽमोदितगोकुलाय नमोस्तु गोपीजनवल्लभाय ॥१
किरीट-केयूर-विभूषिताय ग्रैवेय-मालामणि-रञ्जिताय ।
स्फुरल्लसत्कांचन-कुण्डलाय-नमोस्तु गोपीजनवल्लभाय ॥२
दिव्याङ्गनावृन्दनिषेविताय स्मितप्रभाचारुमुखाम्बुजाय ।
त्रैलोक्यसंमोहन-सुन्दराय नमोस्तु गोपीजनवल्लभाय ॥३॥
रत्नाद्रिमूलालयसंगताय कल्पद्रुमच्छायकृतासनाय ।
हेमस्फुरन्मण्डपमध्यगाय नमोस्तु गोपीजनवल्लभाय ॥४॥
श्रीवत्सरोमावलिरंजिताय वक्षस्थले कौस्तुभभासिताय ।
सरोजकिंजल्कनिभांशुकाय नमोस्तु गोपीजनवल्लभाय ॥५॥
दिव्याङ्गुलीयांगुलिरंजिताय मयूरपिच्छच्छविशोभिताय ।
दिव्याम्वरालंकृत-विग्रहाय नमोस्तु गोपीजनवल्लभाय ॥६॥
मुनीन्द्रवृन्दैर्विधि-संस्तुताय रक्षोगणाद्गोकुलरक्षकाय ।
धर्मार्थकामामृतसाधनाय नमोस्तु गोपीजनवल्लभाय ॥७॥
मनस्तमस्तोमदिवाकराय भक्तेष्टचिन्तामणिसन्निभाय ।
अशेषदुर्नामजभेषजाय नमोस्तु गोपीजनवल्लभाय ॥८॥



अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर श्री श्रीजी
श्रीराधासर्वेश्वरशरणदेवाचार्यजी महाराज द्वारा प्रणीत-

# श्रीसर्वेश्वर प्रातः स्तोत्रम्

ब्रह्मेन्द्रवृन्दारकवन्दिताय वृन्दाटवीधामविराजिताय ।
सर्वेश्वराय श्रुतिगोचराय प्रातर्नमस्ते प्रणतप्रियाय ॥१॥

सनत्कुमारादिकसेविताय देवर्षि-निम्बार्कसमर्चिताय ।
सर्वेश्वराय श्रुतिगोचराय प्रातर्नमस्ते प्रणतप्रियाय ॥२॥

श्रीराधिकावल्लभमाधवाय रङ्गाऽऽदिसख्यावलिरञ्जिताय
सर्वेश्वराय श्रुतिगोचराय प्रातर्नमस्ते प्रणतप्रियाय ॥३॥

अनन्तचिन्मङ्गलविग्रहाय सर्वार्थविद्यावरसम्प्रदाय ।
सर्वेश्वराय श्रुतिगोचराय प्रातर्नमस्ते प्रणतप्रियाय ॥४॥

प्रातः स्तोत्रं सुधापूर्णं सर्वेश्वर--प्रभोरिदम् ।
राधासर्वेश्वराद्येन शरणान्तेन निर्मितम् ॥५॥



श्रीसुदर्शनचक्रावतार आद्याचार्य जगद्गुरु श्रीभगवन्निम्बार्काचार्य प्रणीत-

# ॥ वेदान्तदशश्लोकी ॥

ज्ञानस्वरूपञ्च हरेरधीनं शरीरसंयोगवियोगयोग्यम् ।
अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः ॥१॥
अनादिमायापरियुक्तरूपं त्वेनं विदुर्वै भगवत्प्रसादात् ।
मुक्तञ्च बद्धं किल बद्धमुक्तं प्रभेदबाहुल्यमथापि बोध्यम् ॥२॥
अप्राकृतं प्राकृतरूपकञ्च कालस्वरूपं तदचेतनं मतम् ।
मायाप्रधानादिपदप्रवाच्यं शुक्लादिभेदाश्च समेऽपि तत्र ॥३॥
स्वभावतोऽपास्तसमस्तदोष--मशेषकल्याणगुणैकराशिम् ।
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम् ॥४॥
अंगे तु वामे वृषभानुजां मुदा विराजमानामनुरूपसौभगाम् ।
सखीसहस्रैःपरिसेवितां सदा स्मरेम देवीं सकलेष्टकामदाम् ॥५॥
उपासनीयं नितरां जनैः सदा प्रहाणयेऽज्ञानतमोऽनुवृत्तेः ।
सनन्दनाद्यैर्मुनिभिस्तथोक्तं श्रीनारदायाखिलतत्त्वसाक्षिणे ॥६॥
सर्वं हि विज्ञानमतो यथार्थकंश्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः।
ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूपताऽपि श्रुतिसूत्रसाधिता॥७
नान्या गतिः कृष्णपदारविन्दात् संदृश्यते ब्रह्मशिवादिवन्दितात् ।
भक्तेच्छयोपात्तसुचिन्त्यविग्रहा-चिंत्यशक्तेरविचिंत्यसाशयात् ॥
कृपास्य दैन्यादियुजि प्रजायते यया भवेत्प्रेमविशेषलक्षणा ।
भक्तिर्ह्यनन्याधिपतेर्महात्मनः सा चोत्तमा साधनरूपिकाऽपरा ॥९
उपास्य रूपं तदुपासकस्य च कृपाफलं भक्तिरसस्ततः परम् ।
विरोधिनो रूपमथैतदाप्ते र्ज्ञेया इमेऽर्था अपि पञ्च साधुभिः ॥१०॥

# सायंकालीन श्रीभगवत्स्तुति

श्रीहंसञ्च सनत्कुमारप्रभृतीन् वीणाधरं नारदं
निम्बादित्यगुरूँश्च द्वादशगुरून् श्रीश्रीनिवासादिकान् ।
वन्दे सुन्दरभट्टदेशिकमुखान् वस्विन्दुसंख्यायुतान्
श्रीव्यासाद्धरिमध्यगाच्च परतः सर्वान्गुरून्सादरम् ॥१॥

हे निम्बार्क ! दयानिधे ! गुणनिधे ! हे भक्तचिन्तामणे !
हे आचार्यशिरोमणे ! मुनिगणैरामृग्यपादाम्बुज !।
हे सृष्टिस्थितिपालक ! प्रभवन ! हे नाथ ! मायाधिप !
हे गोवर्द्धनकन्दरालय ! विभो ! मां पाहि सर्वेश्वर! ॥२॥

कस्तूरीतिलकं ललाटपटले वक्षःस्थले कौस्तुभं
नासाग्रे वरमौक्तिकं करतले वेणुः करे कङ्कणम् ।
सर्वाङ्गे हरिचन्दनं सुललितं कंठे च मुक्तावली
गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥३॥

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसंघावृतं
गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे ॥४॥

हे राधे ! वृषभानुभूपतनये ! हे पूर्णचन्द्रानने !
हे कान्ते ! कमनीय-कोकिलरवे ! वृन्दावनाधीश्वरि !।
हे मत्प्राणपरायणे ! च रसिके ! हे सर्वयूथेश्वरि !
आगत्य त्वरितं प्रतप्तमनिशं मां दीनमातन्दय ॥५॥

हे राधे ! वृषभानुभूपतनये ! सर्वेश्वरी ! राधिके !,
हे कृष्णानन-पंकज-भ्रमरिके कृष्णप्रिये माधवि ।
हे वृन्दावननागरी गुणगुरो दामोदरप्रेयसि
हे हे श्रीललितादिक-प्रियसखि प्राणाधिके पाहि माम्।।६
सिञ्जन्नूपुरपादपद्मयुगलां हंसीगतिं बिभ्रतीं
चञ्चत्खञ्जनमञ्जुलोचनयुगां पीनोल्लसत्कन्धराम् ।
शुम्भत्काञ्चनकंकणद्युतिमिलत्पाणौ चलच्चामरं
कुर्वाणां हरिराधिकोपरि सदा श्रीरङ्गदेवीं भजे ।।७।।
श्रीरंगादिसुदेविका च ललिता वैशाखिका चम्पिका
चित्रा तुङ्गसखीन्दुलेखिक-परा चाष्टौ प्रधानप्रियाः ।
अन्याः सन्ति मनोहराः प्रियतमा नित्यं नवीनायिताः
वन्दे तच्चरणारविन्दमनिशं दासोऽस्म्यहं श्रद्धया ।।८।।

स्वभावतोऽपास्तसमस्तदोष-
मशेषकल्याणगुणैकराशिम् ।
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं
ध्यायेम कृष्णं कमलेक्षणं हरिम् ।।९।।
अंगे तु वामे वृषभानुजां मुदा
विराजमानामनुरूपसौभगाम् ।
सखीसहस्रैः परिसेवितां सदा
स्मरेम देवीं सकलेष्टकामदाम् ।।१०।।

नान्या गतिः कृष्णपदारविन्दात्

संदृश्यते ब्रह्मशिवादिवन्दितात् ।

भक्तेच्छयोपात्तसुचिन्त्यविग्रहा-

दचिन्त्यशक्तेरविचिन्त्यसाशयात् ॥११॥

अहो दयालो स्वदयावशेन वै

प्रपश्य मां प्रापय पादसेवने ।

यथा पुनर्मे विषयेषु माधव !

रतिर्न भूयाद्धि तथैव साधय ॥१२॥

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव।

त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देव देव॥१३॥



अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर

श्री श्रीजी श्रीराधासर्वेश्वरशरणदेवाचार्यजी महाराज प्रणीत-

# श्रीनिम्बार्क--चतुश्श्लोकी

हरेरायुधाचार्यनिम्बार्कदेवं

व्रजे धाम्नि सर्वेश्वरार्चानिमग्नम् ।

सदा भक्तवृन्दैः समाराध्यमानं

भजे भानुकोटिप्रकाशं मुनीन्द्रम् ॥१॥

असीमप्रभं नौमि निम्बार्कदेवं

मुहु राधिकाकृष्णयुग्माङ्घ्रिकञ्जे ।

अशेषाऽनुरक्तं पराभक्तिशीलं
महाभावसिन्धौ मुदा गाहमानम् ॥२॥

स्ववेदान्तसिद्धान्त-संस्थापकं श्री-
परब्रह्मरूपाभिव्यक्ति--प्रदाने ।
श्रुतिब्रह्मसूत्रादिसद्भाष्यकारं
भजेऽहं कृपाधाम निम्बार्कदेवम् ॥३॥

मुकुन्दाङ्घ्रिभक्तिप्रचारप्रसिद्धं
श्रुतिव्याहृताऽऽचारमाख्यापयन्तम् ।
असत्प्रोक्ततर्काऽपहारप्रवीणं
समाराधयामीह निम्बार्कदेवम् ॥४॥

श्रीनिम्बार्कचतुश्श्लोकी भक्ताभीष्टप्रदायिनी ।
राधासर्वेश्वराद्येन शरणान्तेन निर्मिता ॥



*अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर*

श्रीराधासर्वेश्वरशरणदेवाचार्यजी महाराज द्वारा प्रणीत-

## ॥श्रीपरशुरामदेवाचार्य--चतुश्श्लोकी॥

श्रुति-पुराण-तन्त्रज्ञं राधासर्वेश्वराश्रितम् ।
परशुराममाचार्यं वन्दे नित्यं जगद्गुरुम् ॥१॥

निम्बार्काचार्यपीठेशं श्रीमन्निम्बार्करूपिणम् ।
परशुराममाचार्यं वन्दे नित्यं जगद्गुरुम् ॥२॥

श्रीहरिव्यासदेवानां शिष्यं सर्वप्रपूजितम् ।
परशुराममाचार्यं वन्दे नित्यं जगद्गुरुम् ।।३।।
प्रत्यक्षं सिद्धिदं दिव्यं देवाचार्यं दयाकरम् ।
परशुराममाचार्यं वन्दे नित्यं जगद्गुरुम् ।।४।।



अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर श्रीहरि-व्यासदेवाचार्यजी महाराज द्वारा विरचित श्रीमहावाणी से उद्धृत-

# सायंकालीन संकीर्तन--स्तुति

पराभक्ति रतिवर्द्धिनी, श्यामा सब सुखदैन ।
रसिक-मुकुट-मनि राधिके, जय नव-नीरजनैन ।।
जयति जय राधा रसिकमनि, मुकुट मनि हरनी प्रिये ।
पराभक्ति-प्रदायिनी करि, कृपा करुणानिधि प्रिये ।।
जयति गोरी नव किसोरी, सकल सुख-सीमा श्रिये ।।परा.
जयति रति-रस-बर्द्धिनी, अति अद्भुता सदया हिये।।परा.
जयति आनन्द कन्दनी, जग बन्दनी वर-वदनीये ।।परा.
जयति श्यामा अमितनामा, वेद विधि निर्वाचिये ।।परा.
जयति रास विलासिनी, कलकला कोटि प्रकाशिये।।परा.
जयति विविध विहार कवनी, रसिकरवनी शुभधिये।परा.
जयति चंचल चारु लोचनि, दिव्य दुकुलाभरनिये ।।परा.
जयति प्रेमा प्रेमसीमा, कोकिला--कलवैनिये ।।परा.

जयति कंचन दिव्य अंगी, नवल नीरज नैनिये ।।परा.
जयति वल्लभ वल्लभा, आनन्द कलभा तरुनिये ।।परा.
जयति नागरि गुण उजागरि,प्रान धन मन हरनिये ।।परा.
जयति नौतन नित्य लीला, नित्य धाम निवासिये ।।परा.
जयति गुन माधुर्य भूपा, सिद्धि रूपा शक्तिये ।।परा.
जयति शुद्ध स्वभावशीला, श्यामला सुकुमारिये ।।परा.
जयति जस जगप्रचुरपरिकर,श्रीहरिप्रिया जीवनजिये।प.



अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्यपीठाधीश्वर श्रीहरि-व्यासदेवाचार्यजी महाराज द्वारा विरचित श्रीमहावाणी से उद्धृत-

# सायंकलीन संकीर्तन--स्तुति

नव नव रंग त्रिभंगिये, श्याम सु--अङ्गी श्याम ।
जय राधे जय हरि प्रिये, श्री राधे सुख धाम ।।
जय राधे जय राधे राधे जय राधे जय श्री राधे ।
जय कृष्ण जय कृष्ण कृष्ण जय कृष्ण जय श्री कृष्ण ।।
श्यामा गोरी नित्य किशोरी, प्रीतम जोरी श्रीराधे ।
रसिक रसीलो छैल छबीलो, गुण-गर्वीलो श्रीकृष्ण ।।
रासविहारिणी रसविस्तारिणी प्रिय उरधारिणी श्रीराधे ।
नव नवरंगी, नवल त्रिभंगी श्याम सु अङ्गी श्री कृष्ण ।।
प्राण प्रियारी, रूप उजारी, अति सुकुमारी श्रीराधे।
मैन मनोहर महा मोदकर सुन्दर वरतर श्री कृष्ण ।।

शोभा श्रेणी मोभा मैनी कोकिल वैनी श्री राधे।
कीरतिवंता, कामिनिकंता, श्रीभगवन्ता श्री कृष्ण।।
चन्दावदनी, कुन्दारदनी, शोभा सदनी श्री राधे।
परम उदारा, प्रभा अपारा, अति सुकुमारा श्री कृष्ण।।
हंसा गमनी, राजत रमनी, क्रीडा कमनी श्री राधे ।
रूप रसाला, नयन विशाला, परम कृपाला श्री कृष्ण ।।
कंचन वेली, रति रस रेली अति अलवेली श्री राधे ।
सब सुख सागर, सब गुण आगर, रूप उजागर श्री कृष्ण।।
रमणी रम्या तरुतरतम्या गुण आगम्या श्री राधे।
धाम निवासी, प्रभा प्रकासी, सहज सुहासी श्री कृष्ण ।।
शक्त्याह्लादिनि अति प्रियवादिनि उर उन्मादिनि श्रीराधे।
अङ्ग अङ्ग टौना, सरस सलौना, सुभग सुठौना श्रीकृष्ण।।
राधानामिनि गुणअभिरामिनि हरिप्रियास्वामिनिश्रीराधे।
हरे हरे हरि, हरे हरे हरि, हरे हरे हरि श्रीकृष्ण ।।

अनन्त श्रीविभूषित जगद्गुरु निम्बार्काचार्य श्रीहरिव्यास-
देवाचार्यजी महाराज द्वारा प्रसारित--

## षोडशाक्षरी-युगलनाम-महामन्त्र-संकीर्तन

* राधे कृष्ण राधे कृष्ण कृष्ण कृष्ण राधे राधे।
राधेश्याम राधेश्याम श्याम श्याम राधे राधे।।

* इस महामन्त्र का जाप भी करना आवश्यक है। इसमें समय विशेष का कोई प्रतिबन्ध नहीं है अधिक से अधिक जितना भी बन सके करें।

## ॥ श्री भगवत् भागवत--संकीर्तन ॥

राधासर्वेश्वर अवतार, हंस रूप श्रुति-मत विस्तार।
सनक सनन्दन आदिकुमार जयति सनातन सनतकुमार॥
श्रीनारदमुनि परम उदार, युगलनाम जप करत विहार।
राधासर्वेश्वर सुखरास, श्रीनिम्बारक श्रीहरिव्यास॥
श्रीरङ्गदेवीजू हरिप्रिया पास, युगलकिशोर सदा सुखरास।
जय वृन्दावन जय यमुना, जय वंशीवट जय पुलिना॥
जय जय श्यामा जय २ श्याम, जय २ श्रीवृन्दावनधाम।

## ॥ पद--संकीर्तन ॥

मदन गोपाल शरण तेरी आयो।
चरण कमल की सेवा दीजै, चेरो करि राखो घर जायो॥
धनि२ मात-पिता सुत बन्धु, धनि जननी जिन गोद खिलायो।
धनि२ चरन चलत तीरथ को, धनि गुरु जिन हरिनाम सुनायो॥
जे नर विमुख भये गोविन्द सों, जनम अनेक महादुख पायो।
श्रीभट्ट के प्रभु दियो अभय पद, यम डरप्यो जब दास कहायो॥

## ॥ श्रीसर्वेश्वर प्रभु की आरती ॥

आरती श्रीसर्वेश्वर की। परम धन रस रसिकेश्वर की।
युगल छवि अति सुन्दर सोहैं।
रसिक जन दर्शन कर मोहैं॥

निखिल माधुर्य सिन्धु जो हैं।
परात्पर पूर्ण ब्रह्म वो हैं॥
श्यामा श्याम, कृपा के धाम, पूर्ण जन काम,
रुचिर छवि प्रिय प्राणेश्वर की।
परम धन रस रसिकेश्वर की॥१॥
वृन्दावन निर्मल यमुना नीर।
सुशोभित सुभग मनोहर तीर॥
बहत जहँ सुन्दर त्रिविध समीर।
विराजत कदली_कुञ्ज कुटीर॥
सखीजन प्रान, वेणुकल गान करत रस दान,
मधुर छवि व्रज विपिनेश्वर की।
परम धन रस रसिकेश्वर की॥२॥
ध्येय अज-शिव-मघवादिक के।
सेव्य महरिषि सनकादिक के॥
गेय नारद सुर रिषिवर के।
सेव्य पुनि निम्बारक प्रभु के॥
शालिगराम, कलेवर श्याम, नयन अभिराम,
अतुल छवि निखिल सुरेश्वर की।
परम धन रस रसिकेश्वर की॥३॥
पीठ निम्बारक आचारज।
विराजत सर्वेश्वर सज-धज॥

पुष्कर  क्षेत्र माँहि अचरज ।
परम सुख विलसत है तिन भज ॥
करत दरशन, प्रेम वरषन, होत परसन,
विनय  राधासर्वेश्वर  की ।
परम धन रस रसिकेश्वर की ॥४॥



# श्रीराधामाधवजी की आरती

राधामाधव युगलवपु सेवित कवि जयदेव ।
निम्बारक आचार्यपीठ, कृपा करी गिरिदेव ॥१॥
श्री श्रीजी गोविन्दशरण,-देवाचार्य महान् ।
तिनके अतिशय प्रेमवश, राजत पीठ प्रधान ॥२॥
आरती राधामाधव की । मधुर-मुखचन्द्र--सुधार्णव की ॥
विराजित मणिमय-मञ्जुल-कुञ्ज ।
मनोरम नवतरु-कुसुम-सुपुञ्ज ॥
खगकुल-कलरव-मधुकर-गुञ्ज ।
उपासत सखिजन नित्यनिकुञ्ज ॥
परम कमनीय, अनिरवचनीय, हृदय रमनीय,
दिव्य छवि अनुपम वैभव की ।
मधुर--मुखचन्द्र--सुधार्णव की ॥१॥
सेवित रसकवि श्रीजयदेव ।
वाञ्छत जिन पदरज मुनि-देव ॥

रसिकजन सो रज नित हि पेव ।
पुलकित हो जावे परिसेव ॥
गोवर्द्धन धाम, करत विश्राम, सकल जनकाम,
कृपा अति अभिनव केशव की ।
मधुर--मुखचन्द्र--सुधार्णव की ॥२॥
पधारे पीठ--निम्बारक धाम ।
विराजे कनकपीठ अभिराम ॥
शोभा अमित बनी धन गाम ।
दरश कर मुदित सकलजन-वाम ॥
युगल दम्पति, रसिक सम्पति, निखिल जम्पति,
शरण श्रीराधा (सर्वेश्वर) माधव की ।
मधुर--मुखचन्द्र--सुधार्णव की ॥३॥



# श्रीनिम्बार्क भगवान् की आरती

जय निम्बार्क हरे, प्रभु जय निम्बार्क हरे ।
तुम बिन और न दूजा, भव से पार करे ॥ जय० ॥१॥
तुम हो अगम अगोचर, करुणानिधि स्वामी ।
पूरण ब्रह्म दयालू, जग अन्तरयामी ॥ जय० ॥२॥
भक्तन के हित कारण, लीला अवतारी ।
चक्र सुदर्शन धारे, ताप-त्रय हारी ॥ जय० ॥३॥

किन्नर गायन करते, सप्त स्वर सहिता ।
बाजत ताल मृदंगा, धिकतां तां धिकता ॥ जय० ॥ ४ ॥
द्वैताद्वैत प्रचार्‌यो, प्रभु संतन तारन ।
आवागमन मिटावन, कलिमल अघ पावन ॥ जय० ॥ ५ ॥
दीन दयालु दयानिधि, दीनन हितकारी ।
वेद पुराण बखानत, महिमा अति भारी ॥ जय० ॥ ६ ॥
निशि-दिन ध्यान धरै चित, दुख विनसे मन का ।
काम क्रोध मद नाशे, कष्ट मिटे तनका ॥ जय० ॥ ७ ॥
जो जन ध्यान से आरती, प्रेम सहित गावे ।
वो जगदीश परम पद, सो निश्चय पावे ॥ जय० ॥ ८ ॥

( राग सारंग )

ब्रज भूमि मोहनी मैं जानी ।
मोहन कुञ्ज मोहन श्रीवृन्दावन, मोहन जमुना पानी ॥
मोहनी नारि सकल गोकुल की, बोलत मोहनी बानी ।
श्रीभट्ट के प्रभु मोहन नागर, मोहनी राधा रानी ॥

( राग कान्हरो )

युगलकिशोर हमारे ठाकुर ।
सदा सर्वदा हम जिनके हैं, जनम जनम घर जाये चाकर ॥
चूक परे परिहरहिं न कबहूँ, सब ही भाँति दया के आकर ।
श्रीभट्ट प्रगट त्रिभवन मैं, प्रणतनि पोषण परम सुधाकर ॥

( राग भूपाली )

राधा माधव अद्भुत जोरी ।
सदा सनातन एक रस विहरत, अविचल नवल किशोर किशोरी॥
नख शिख सब सुषमा रतनागर, भरत रसिकवर हृदय सरोरी।
जैश्रीभट्ट कटक कर कुण्डल, गंडवलय मिलि लसत हिलोरी ॥

( राग खम्माच )

मंगल मूरति नियमानन्द ।
मंगल युगल किशोर हंस वपु, श्रीसनकादिक आनन्दकन्द ॥
मंगल श्री नारद मुनि मुनिवर, मंगल निम्ब दिवाकर चन्द ।
मंगल श्री ललितादि सखीगन, हंस वंश सन्तन के वृन्द ॥
मंगल श्री वृन्दावन जमुंना, तट वंशीवट निकट आनन्द।
मंगल नाम जपत जय श्रीभट्ट, कटत अनेक जनम के फन्द ॥

( राग यमन )

जय जय वृन्दावन रजधानी ।
जहाँ विराजत मोहन राजा, श्री राधा सी रानी ॥
सदा सनातन इकरस जोरी, महिमा निगम न जानी ।
श्रीहरिप्रिया हितू निज दासी, रहति सदा अगवानी ॥

( राग हमीर )

जीवन धन राधावल्लभ लाल ।
कृष्णा वल्लभा रसिकनि राधा, वारिज वदनी बाल ॥
जुगल किशोर किशोरी जोरी, गोरी श्याम तमाल ।
बसहु निरन्तर हिय में श्रीहरिप्रिया, आनन्द रूप रसाल ॥

( राग तिलक कामोद )

जिनके सर्वस जुगल किशोर ।
तिहिं समान अस को बड़भागी, गनि सबके सिरमोर ॥
नित्य विहार निरन्तर जाकों, करत पान निसि भोर ।
श्रीहरिप्रिया निहारत छिन-छिन, चितय चखन की कोर ॥

( राग केदारा )

खेलत रास रसिक राधावर मोहन मंगलकारी ॥
सोभित स्याम कमलदल लोचन, संग राधिका प्यारी ॥
सिर सिखण्ड उर विविध माल, मुरली धुनि करण मुरारी ॥
कटि काछनी वन्यौ उपरैना, पीताम्बर धार्‍यों बनवारी ॥
बन्यौ अधिक गोपिन को मंडल, मधि गोवरधन धारी ॥
कर सो कर जोरैं नटनागर, नाचत केलि विहारी ॥
राजित अति नानागति निर्तत, सुन्दर वर व्रजनारी ॥
मोहे शिव ब्रह्मा मनोज सुर, हरि औसर सुख भारी ॥
अविगति नाथ निर्गुण वपु धरि, सगुण लीला विस्तारी ॥
भगत हेति आधीन अभै पद, परसा जन बलिहारी ॥

( राग सारङ्ग )

नमो नमो निम्बारक स्वामी ।
नमो नमो जय श्री वृन्दावन, सब धामन के हो तुम धामी ॥
नमो नमो जय श्रीराधामाधव, सब देवन के अन्तरयामी ।
कृष्णदास अभिराम श्याम भज, नमो नमो सब पूरण कामी ॥

( राग देश )

जग में हरि के जन बड़भागी ।
निस दिन भजन भावना बितवन, चरन कमल अनुरागी ।।
प्रेम मगन गावत माधौ गुन, हरि धन भये बिभागी ।
धारत तिलक माल तुलसी की, बुधि सोतैं द्रुत जागी ।।
दरशन पावन होयँ पतित जन, जिनकी मति हरि पागी ।
गोविंन्दसरन बिस्व--उपकारी, रसना हरि रट लागी ।।

( राग मालकोश )

नीके विहारी--विहारनि प्यारे ।
कुंजमहल राजत रँगभीनै, सखि नैननि के तारे ।।
अद्‌भुत गौर--साँवरे दम्पति, पलहू होत न न्यारे ।
मन बसी रसी सोहनी मूरति, बिसरत क्यौंव बिसारे ।।
रूपसुधा रस पियै परसपर, रहत प्रेम मतवारे ।
गोविंदसरन जिय कल न परत है, जब ते नैन निहारे ।।



# आचार्य परम्परा

| आचार्य नामावली | रहस्य नाम | उत्सव मास तिथि |
|---|---|---|
| १. श्रीहँस भगवान् | | कार्तिक शु० ६ |
| २. श्रीसनकादि भगवान् | (हरिणी आदि) | कार्तिक शु० ६ |
| ३. देवर्षि श्रीनारद भगवान् | (मुग्धादि) | मार्गशीर्ष शु० १२ |
| ४. श्रीसुदर्शनचक्रावतार जगद्गुरु श्रीभगवन्निम्बार्काचार्य | (श्रीरंगदेवी) | कार्तिक शु० १५ |
| ५. श्री श्रीनिवासाचार्यजी | (नव्यवासा) | माघ शु० ५ |
| ६. श्रीविश्वाचार्यजी | (विश्वाभा) | फाल्गुन शु० ४ |
| ७. श्रीपुरुषोत्तमाचार्यजी | (उत्तमा) | चैत्र शु० ६ |
| ८. श्रीविलासाचार्यजी | (विलासा) | वैशाख शु० ८ |
| ६. श्रीस्वरूपाचार्यजी | (सरसा) | ज्येष्ठ शु० ७ |
| १०. श्रीमाधवाचार्यजी | (मधुरा) | आषाढ शु० १० |
| ११. श्रीवलभद्राचार्यजी | (भद्रा) | श्रावण शु० ३ |
| १२. श्रीपद्माचार्यजी | (पद्मा) | भाद्रपद शु० १२ |
| १३. श्रीश्यामाचार्यजी | (श्यामा) | आश्विन शु० १३ |
| १४. श्रीगोपालाचार्यजी | (शारदा) | भाद्रपद शु० ११ |
| १५. श्रीकृपाचार्यजी | (कृपाला) | मार्गशीर्ष शु० १५ |
| १६. श्रीजान्हवीकार श्रीदेवाचार्यजी | (देवदेवी) | माघ शु० ५ |
| १७. सेतुकार श्रीसुन्दरभट्टाचार्यजी | (सुन्दरी) | मार्गशीर्ष शु० २ |
| १८. श्रीपद्मनाभ भट्टाचार्यजी | (पद्मालया) | वैशाख कृ० ४ |
| १६. श्रीउपेन्द्र भट्टाचार्यजी | (इन्दिरा) | चैत्र कृ० ३ |
| २०. श्रीरामचन्द्रभट्टाचार्यजी | (रामा) | वैशाख कृ० ७ |
| २१. श्रीवामन भट्टाचार्यजी | (वामा) | ज्येष्ठ कृ० ६ |
| २२. श्रीकृष्णभट्टाचार्यजी | (कृष्णा) | आषाढ कृ० ६ |
| २३. श्रीपद्माकरभट्टाचार्यजी | (पद्मा) | आषाढ कृ० ८ |

| | | |
|---|---|---|
| २४. श्रीश्रवणभट्टाचार्यजी | (श्रुतिरूपा) | कार्तिक कृ० ९ |
| २५. श्रीभूरिभट्टाचार्यजी | (भगवती) | आश्विन कृ० १० |
| २६. श्रीमाधवभट्टाचार्यजी | (माधवी) | कार्तिक कृ० ११ |
| २७. श्रीश्यामभट्टाचार्यजी | (असिता) | चैत्र कृ० १२ |
| २८. श्रीगोपालभट्टाचार्यजी | (गुणाकरी) | पौष कृ० ११ |
| २९. श्रीवलभद्रभट्टाचार्यजी | (वल्लभा) | माघ कृ० ११ |
| ३०. श्रीगोपीनाथभट्टाचार्यजी | (गौरांगी) | श्रावण शु० ७ |
| ३१. श्रीकेशवभट्टाचार्यजी | (केशी) | चैत्र शु० १ |
| ३२. श्रीगांगलभट्टाचार्यजी | (पवित्रा) | चैत्र कृ० २ |
| ३३. श्रीकेशवकाश्मिरीभट्टाचार्यजी | (कुंकुमांगी) | ज्येष्ठ शु० ४ |
| ३४. श्रीश्रीभट्टाचार्यजी | (हितू) | आश्विन शु० २ |
| ३५. श्रीहरिव्यासदेवाचार्यजी | (हरिप्रिया) | कार्तिक कृ० ११ |
| ३६. श्रीपरशुरामदेवाचार्यजी | (परमा) | भाद्रपद कृ० ५ |
| ३७. श्रीहरिवंशदेवाचार्यजी | (हितअलवेली) | मार्गशीर्ष कृ० ४ |
| ३८. श्रीनारायणदेवाचार्यजी | (नित्यनवीना) | पौष शु० ९ |
| ३९. श्रीवृन्दावनदेवाचार्यजी | (मनमंजरी) | भाद्रपद कृ० १३ |
| ४०. श्रीगोविन्ददेवाचार्यजी | (गौरांगी) | कार्तिक कृ० ५ |
| ४१. श्रीगोविन्दशरणदेवाचार्यजी | (गुणमंजरी) | कार्तिक कृ० ८ |
| ४२. श्रीसर्वेश्वरशरणदेवाचार्यजी | (रूपमंजरी) | पौष कृ० ६ |
| ४३. श्रीनिम्बार्कशरणदेवाचार्यजी | | ज्येष्ठ शु० ६ |
| ४४. श्रीव्रजराजशरणदेवाचार्यजी | | ज्येष्ठ शु० ५ |
| ४५. श्रीगोपीश्वरशरणदेवाचार्यजी | | माघ कृ० १० |
| ४६. श्रीघनश्यामशरणदेवाचार्यजी | | आश्विन कृ० ६ |
| ४७. श्रीबालकृष्णशरणदेवाचार्यजी | | चैत्र कृ० १३ |
| ४८. श्रीराधासर्वेश्वरशरणदेवाचार्यजी | | ज्येष्ठ शु० २ |

विराजमान

# महाप्रसाद ग्रहण के समय की पारम्परिक

# जय--ध्वनि

१.श्रीरामकृष्णदेव जू की जय
२. श्रीराधासर्वेश्वर जू की जय
३.श्रीराधामाधव जू की जय
४. श्रीगोकुलचन्द्रमा जू की जय
५. श्रीआनन्दमनोहर वृन्दावनचन्द्र जू की जय
६. श्रीरूपमनोहर वृन्दावनचन्द्र जू की जय
७. श्रीगोवर्द्धनधारी जू की जय
८. श्रीमानसी गङ्गा जू की जय
६. श्रीवृन्दावन धाम जू की जय
१०. श्रीअवधपुरी मधुपुरी जू की जय
११. श्रीगङ्गा--यमुना जू की जय
१२. श्रीकाशी प्रयाग जू की जय
१३. श्रीलोहार्गल पुष्कर जू की जय
१४. श्रीचारधाम जू की जय
१५. श्रीचार सम्प्रदाय जू की जय
१६. श्री बावन द्वारों की जय
१७. श्रीहँस भगवान् जू की जय
१८. श्रीसनकादिक भगवान् जू की जय
१६. श्रीनारद् भगवान् जू की जय
२०. श्रीनिम्बार्क भगवान् जू की जय
२१. श्रीनिवासाचार्य जू की जय
२२. द्वादश आचार्य जू की जय
२३. अष्टादशभट्ट जू की जय
२४. श्रीभट्टदेव जू की जय

२५. श्रीहरिव्यासदेव जू की जय
२६. श्रीद्वादश द्वारों की जय
२७. श्रीपरशुरामदेव जू की जय
२८. श्रीहरिवंशदेव जू की जय
२९. श्रीनारायणदेव जू की जय
३०. श्रीवृन्दावनदेव जू की जय
३१. श्रीगोविन्ददेव जू की जय
३२. श्रीगोविन्दशरणदेव जू की जय
३३. श्रीसर्वेश्वरशरणदेव जू की जय
३४. श्रीनिम्बार्कशरणदेव जू की जय
३५. श्रीव्रजराजशरणदेव जू की जय
३६. श्रीगोपीश्वरशरणदेव जू की जय
३७. श्रीघनश्यामशरणदेव जू की जय
३८. श्रीबालकृष्णशरणदेव जू की जय
३९. श्री श्रीजी महाराज जू की जय
४०. श्री अनन्त कोटि वैष्णवों की जय
४१. श्री स्थान पुरुष की जय
४२. श्री रसोईया पुजारी की जय
४३. श्री कोठारी भण्डारी की जय
४४. श्री सब सती सेवकों की जय
४५. श्री उनके माता--पिता की जय
४६. श्री उनके बाल--गोपाल की जय
४७. श्री उनके समस्त परिवार की जय
४८. श्री अपने-अपने गुरु गोविन्द की जय

बोलना हरे - **राम कहें सुख ऊपजे, कृष्ण कहें दुःख जाय ।**

**महिमा महाप्रसाद की, पावो प्रीति लगाय ।।**

# दीक्षित एवं दीक्षार्थियों

# के

# पालनीय--नियम

शास्त्रों में बिना दीक्षा लिए मन्त्र का जप करना निषेध बतलाया है। कहा है कि जो साधक गुरुदेव से दीक्षा न लेकर केवल पुस्तकों को देखकर ही जप करने लग जाते हैं उन्हें ब्रह्महत्या के समान पातक लगता है--

**पुस्तके लिखितान् मन्त्रा-नालोक्य-प्रजपन्ति ये।**

**ब्रह्महत्या-समं तेषां, पातकं परिकीर्तितम्॥**

(मन्त्र महार्णव)

जैसे पत्थर पर बोया हुआ बीज अंकुरित नहीं होता वैसे ही मन्त्र की दीक्षा लिए बिना जप, तप, दान आदि सब साधन व्यर्थ हैं। जिस मनुष्य की बिना दीक्षा लिए ही मृत्यु हो जाती है वह अभीष्ट मार्ग निर्देश एवं सिद्धि के अभाव में सतत संसार चक्र में ही भ्रमण करता रहता है। दीक्षा के सम्बन्ध में भगवान् शङ्कर का भी उपदेश है--

**अदीक्षितस्य वामोरू ! कृतं सर्वं निरर्थकम्।**

अर्थात् बिना दीक्षा ग्रहण किये जो कार्य किया जाता है वह सफल नहीं होता। अतः प्रत्येक स्त्री--पुरुष को गुरुदेव से ही संस्कार सहित वैष्णवी दीक्षा लेकर (मन्त्र दीक्षा) मन्त्र का जप करना चाहिए।

दीक्षित साधकों का कर्तव्य है कि वे दीक्षा सम्बन्धी पालनीय नियमों का विधि पूर्वक पालन करें, क्योंकि बिना नियम पालन किये अभीष्ट--फल सिद्धि नहीं होती। अतएव निम्नांकित कतिपय पालनीय नियम संक्षिप्त रूप से भक्तों के हितार्थ उद्धृत किये जाते हैं--

(१) **तिलक**--भगवान् के द्वादश नामों द्वारा ललाट आदि शरीर के बारह अङ्गों पर प्रतिदिन गोपीचन्दनादि से द्वादश ऊर्ध्वपुण्ड्र तिलक करना चाहिए।

(२) **शङ्ख-चक्र**--दोनों भुजाओं पर गोपीचन्दनादि से नित्य धारण करना चाहिए।

(३) **कण्ठी**--तुलसी की कण्ठी गले में सदैव रखनी चाहिए। जन्म-मरण या ग्रहण आदि के किसी अशौच में उसे बदलने की आवश्यक्ता नहीं। भगवत्प्रिया तुलसी हरिस्वरूप होने के कारण कभी भी अपवित्र नहीं होती। यदि कण्ठी का सूत्र खण्डित हो जाय या गल जाय तो उसे दूसरे डोरे में पिरो कर अथवा नवीन ( संस्कार करा कर ) धारण करना चाहिए।

(४) **नाम**--दीक्षा के समय गुरुदेव जो भगवत्सम्बन्धी नाम रखें उसी नाम का उपयोग सदैव करना चाहिए।

(५) **मन्त्र**--श्रीगुरुदेव से श्रीयुगल मन्त्र, श्रीगोपाल मन्त्रराज या श्रीमुकुन्दमन्त्र आदि जो मन्त्र प्राप्त हो कम से कम तीन माला तो उसका जप करना ही चाहिए।

(६) जप करते समय एक ही वस्त्र पहन कर जप न करें। अंगोछा दुपट्टा आदि दूसरे वस्त्र से शरीर को ढककर रखना चाहिए। मन्त्र जप उपांशु ( मन ही मन ) अथवा अत्यन्त धीरे-धीरे करना चाहिए। कभी कम कभी अधिक इस प्रकार जप न करें। निर्धारित संख्या पूर्ति हो जाने पर ही अधिक जप करना चाहिए।

(७) एकवस्त्र की भाँति अनेक वस्त्रों को जप के समय धारण न करें। जाप के समय रेशमी या ऊनी अथवा धुला सूती वस्त्र धारण करना चाहिए। ( वस्त्र शुद्ध होना ही केवल आवश्यक है )।

(८) ध्यान--जप करते समय नित्यनिकुञ्ज विराजित श्रीयुगल-किशोर भगवान् श्रीराधाकृष्ण का ध्यान करें।

(९) श्रीप्रियाप्रियतम युगलकिशोर की प्रतिमा या चित्रपट की ही नित्य सेवा करें।

(१०) भगवान् का चरणामृत और तुलसी लेकर ही भोजन करना चाहिए।

(११) वैष्णवों को प्रतिपक्ष की एकादशी एवं भगवज्जयन्तियों का व्रत अवश्य करना चाहिए।

(१२) अपने--अपने घर के द्वार पर शङ्ख--चक्र और ऊर्ध्वपुण्ड्र (तिलक) केचिह्न अवश्य लगाने चाहिए,उनके दर्शन से सत्प्रेरणा मिलती है एवं आत्म-कल्याण में बड़ा योग मिलता है।

(१३) शास्त्र प्रतिपादित सदाचार का पालन करना परम कर्तव्य है।

(१४) नित्य मन्दिर में हरिदर्शन, सत्सङ्ग एवं सन्त-सेवा से आत्म-कल्याण होता है, अतः इससे वञ्चित नहीं रहना चाहिए।

(१५) चलते फिरते सब समय भगवच्चिन्तन करते रहना चाहिए।

(१६) दुःखियों को देखकर दुःखी होना और सुखियों को देखकर सुखी होना वैष्णवों का स्वाभाविक लक्षण है।



ऊर्ध्वपुण्ड्र तिलक करने के--

# द्वादश स्थान

१. ॐ **केशवाय नमः** ( ललाट पर )

२. ॐ **नारायणाय नमः** ( पेट पर )

३. ॐ **माधवाय नमः** ( हृदय पर )

४. ॐ **गोविन्दाय नमः** ( कण्ठ पर )

५. ॐ **विष्णवे नमः** ( दाहिनी कोख पर )

६. ॐ **मधुसूदनाय नमः** ( दाहिनी भुजा पर )

७. ॐ **त्रिविक्रमाय नमः** ( दाहिने कन्धे पर )

८. ॐ **वामनाय नमः** ( बायीं कोख में )

९. ॐ **श्रीधराय नमः** ( बायीं भुजा पर )

१०. ॐ **हृषीकेशाय नमः** ( बायें कन्धे पर )

११. ॐ **पद्मनाभाय नमः** ( पीठ पर )

१२. ॐ **दामोदराय नमः** ( कटि भाग में )



# नित्य प्रयोग में आने वाले मन्त्र--

तिलक धारण मन्त्र--

गोपीचन्दनपापघ्न ! विष्णुदेहसमुद्भव ।
चक्रांकितनमस्तुभ्यं धारणान्मुक्तिदो भव ॥

चक्र धारण मन्त्र--

सुदर्शन महाबाहो सूर्यकोटिसमप्रभ ।
अज्ञानतिमिरान्धानां विष्णोमार्ग प्रदर्शय ॥

शङ्ख धारण मन्त्र--

पाञ्चजन्यनिजध्वान ध्वस्तपातक--संचय ।
पुनीहि पापिन घोरं संसारार्णवपातिनम् ॥

कण्ठी धारण मन्त्र--

ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलपरिचिन्हित शंखचक्राः ।
ये वा ललाटपटले लसदूर्ध्वपुण्ड्राः
ते वैष्णवाः भुवनमाशु पवित्रयन्ति ॥

गोपाल गायत्री मन्त्र--

ॐ गोपालाय विद्महे, गोपीवल्लभाय धीमही,
तन्नः कृष्णः प्रचोदयात् ।

तुलसी समर्पण मन्त्र--

**तुलसीं हेमरूपाञ्च रत्नरूपाञ्च मञ्जरीम् ।**
**भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम् ।।**

श्रीमुकुन्द (शरणागति) मन्त्र--

**श्रीमन्मुकुन्द चरणौ सदा शरणमहं प्रपद्ये ।**

अष्टादशाक्षर श्रीगोपाल मन्त्रराज--

**क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा ।**

दशाक्षर--गोपालमन्त्र--

**गोपीजनवल्लभाय स्वाहा ।**

आसन शुद्धि--

**ॐ पृथ्वीत्वयाधृता लोका देवि त्वं विष्णुना धृता ।**
**त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।**

शरीर शुद्धि--

**ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।**
**यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ।।**



॥ श्रीसर्वेश्वरो जयति ॥

श्रीनिम्बार्काचार्यपीठ द्वारा सञ्चालित-

# पारमार्थिक संस्थाएँ

१. श्रीसर्वेश्वर मासिक-पत्र
२. श्रीनिम्बार्क पाक्षिक-पत्र
३. श्रीनिम्बार्क ग्रन्थमाला
४. श्रीसर्वेश्वर संस्कृत महाविद्यालय
५. श्रीनिम्बार्क दर्शन विद्यालय
६. श्रीसर्वेश्वर वेद विद्यालय
७. श्रीराधासर्वेश्वर छात्रावास
८. श्रीराधामाधव गोशाला
९. श्रीहरिव्यास औषधालय
१०. श्रीनिम्बार्क पुस्तकालय
११. श्रीहँस वाचनालय
१२. सन्त-सेवा
१३. पक्षी-सेवा
१४. श्रीराधामाधव स्थायी सेवानिधि
१५. श्रीसर्वेश्वर संस्कृत महाविद्यालय स्थायी सेवानिधि

उपर्युक्त पारमार्थिक संस्थाओं की प्रगति में आप भी अपनी आर्थिक सेवाएँ समर्पित कर सहयोग प्रदान कीजिए ।

--व्यवस्थापक

पुस्तक प्राप्ति स्थान--

**श्रीनिम्बार्काचार्यपीठ**

निम्बार्कतीर्थ - सलेमाबाद, पुष्करक्षेत्र
जिला-अजमेर ( राजस्थान ) ३०५८१५
फोन नं. ०१४६७ - २२७८३१ कार्यालय

प्रकाशक:-

**श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ**

( सलेमाबाद ) किशनगढ़ ( राजस्थान )

**एकादशावृत्ति**
**5000**

**वि. सं.**
**2072**

**निम्बार्काब्द:**
**5111**

**न्यौछावर**
**पाँच रुपये**

मुद्रक :-

**श्रीनिम्बार्क - मुद्रणालय**

निम्बार्कतीर्थ - सलेमाबाद
जि. अजमेर (राजस्थान)